॥ दिव्यदेशमङ्गलाशासनश्लोकाः ॥

श्रीः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

विधिविहितसपर्यां वीतदोषानुषङ्गां
उपचितधनधान्यामुत्सवः स्त्यानहर्षाम् ।
स्वयमुपचिनु नित्यं रङ्गधामन्  स्वरक्षां
शमितविमतपक्षां शाश्वतीं रङ्गलक्ष्मीम् ॥

- श्री सारसारम् -  ( श्रीरङ्गम् )

प्रशमितकलिदोषां प्राज्यभोगानुबन्धां
समुदितगुणजातां सम्यगाचारयुक्ताम् ।
श्रितजनबहुमान्यां श्रेयसीं वेङ्कटाद्रौ
श्रियमुपचिनु नित्यं श्रीनिवास त्वमेव ॥

- श्री रहस्यनवनीतम् - (वेङ्कटाद्रिः)

वरद विरचय त्वं वारिताशेषदोषां
पुनरुपचितपुण्यां भूषितां पुण्यकोट्या ।
सितमुदितमनोभिस्तावकैर्नित्यसेव्यां
हतरिपुजनयोगां हस्तिधाम्नस्समृद्धिम् ॥

-  श्री तत्वनवनीतम् - ( काञ्चीपुरम् )

नवनवबहुभोगां नाथ नारायण त्वं
विरचय दुरितौघैस्तामनाघ्नातगन्धाम् ।
सहजसुलभदास्यैस्सद्भिरभ्यर्थनीयां
यतिपरिबृढहृद्यां यादवाद्रेस्समृद्धिम् ॥

- (तिरुनारायणपुरम् )

श्रीरङ्गद्विरदवृषाद्रिपूर्वकेषु
स्थानेषु स्थिरविभवा भवत्सपर्या ।
आकल्पं वरद विधूतवैरिपक्षा

भूयस्या भवदनुकम्पयैव भूयात् ॥

- (श्री रहस्यपदवी)

इति श्रीमन्निगमान्तमहादेशिकविरचिताः
दिव्यदेशमङ्गलाशासनश्लोकाः ।

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥